# प्रथमोऽध्यायः

## उपोद्घातः

इह खलु निखिलचराचरजगति मरणधर्माणो मनुष्यास्सर्वे सुखमेवाभिलषन्ति, द्विषन्ति च दु:खाय । तत्रापि सुखप्राप्त्यपेक्षया दु:खनिवृत्तिरेव सर्वैरभिलष्यते । सा च द:खनिवृत्तिर्द्विविधा- (1) ''जातस्य दु:खस्यापाकरणम्, (2) दु:खस्यानागमनाय कृतः प्रयत्नः । तयोर्मध्ये प्राज्ञा दु:खस्यानागमनमेव वाञ्छन्ति । मानवानां दु:खस्य मूलकारणं संसार एव । तथाच प्रपञ्च एव संसार संसाररुपो दु:खभाग्वर्तते । तन्निवृत्तिरेव मोक्षः ।

भारतदेशे मानवा आस्तिकनास्तिकभेदेन द्विविधाः । ते सर्वेऽपि धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयमङ्गीकुर्वन्ति । तेषु चतुर्षु पुरुषार्थेषु अर्थकामावधमश्रेणिकोटिप्रविष्टौ । धर्मोमध्यमः । मोक्ष उत्तमः । तत्रार्धकामावैहिकसुखसाधने । तयोर्दुःखमूलकत्वात्ते अप्रधाने । तयोरप्यर्थपुरुषार्थ उपायमूलकत्वादप्रधानमिति, फलमूलकत्वेन कामपुरुषार्थः प्रधानमिति विदुषामभिप्रायः । धर्मपुरुषार्थो द्विविधः- प्रवृत्तिरुपो निवृत्तिरूपश्चेति । अभ्युदयसाधनमूलको धर्मः प्रवृत्तिधर्मः । मोक्षपुरुषार्थसाधनरुपो धर्मो निवृत्तिधर्मः । उपर्युक्तेषु चतुर्षु पुरुषार्थेषु मोक्षो मुख्यतमः पुरुषार्थः । स संसारमूलकारणनाशेन जायते । तस्य मूलकारणस्यान्वेषणे प्राज्ञा महर्षयस्स्वबुद्ध्यनुसारं भिन्नभिन्नमार्गान् । त एव दर्शनकर्तारः । ते

चास्तिकनास्तिकभेदेन द्विविधाः । वेदप्रामाण्यमङ्गीकृत्य तेषु प्रदर्शितमार्गानुसारं मोक्षसाधनाभिलषिणः आस्तिकाः । ये तु स्वबुद्धिबलेनैव संसारस्य मूलकारणमन्विषन्ति ते नास्तिकाः । एवं रीत्या दर्शनान्यप्यास्तिकभेदेन द्विधा विभक्तानि । ''वैशेषिकन्यायसाङ्ख्ययोगपातञ्जलपूर्वमीमांसोत्तरमीमांसारुपाणि षडास्तिकानि । चार्वाकबौद्धजैनदिगम्बरार्हतासौमनामकानि षणास्तिकदर्शनानि ।

अत्रास्मिन् सन्दर्भे केचन पण्डिता एवमभिप्रयन्ति यद्वैशेषिकन्यायसाङ्ख्ययोगपातञ्जल-पूर्वमीमांसोत्तरमीमांसानां दर्शनत्वेऽपि व्याकरणस्य दर्शनत्वं नैव सेत्स्यति । यतो हि न्यायवैशेषिकादिदर्शनवत् व्याकरणस्य मोक्षसाधकत्वाभावात् । तथा च व्याकरणस्य दर्शनत्वस्यैवाभावे कथं वा तस्याद्वैतदर्शनत्वप्रतिपादनमिति ।

अत्रेदंसमाधानम् - वैशेषिकन्यायसाङ्ख्ययोगपुर्वेत्तरमीमांसावद्-व्याकरणमप्यास्तिक-मद्वैतं दर्शनं भवत्ये वा तथाहि -

**''व्याकरणस्य दर्शनत्वसिद्धिः''**

मानवानां परस्पराभिप्रायविष्करणायातिमुख्यं साधनं भवति भाषा । तस्यां साध्वसाधुशब्दा वर्तन्ते । तेष्वसाधुशब्दान् दूरीकृत्य साधुशब्दतदर्थबोधनाय व्याकरणमावश्यकम् । एतानि व्याकरणान्यैन्द्रचान्द्रापिशलकाशकृत्स्ना''दिभेदेन नवविधानि । तेषु पाणिनीयमन्यतमम् । अद्यत्वे वैयाकरणानां व्यकारणान्तरापेक्षया साधुशब्दतदर्थज्ञानाय पाणिनीयमेवात्यन्तमुपकारकं भवति । पाणिनिव्याकरणस्य सूत्रकर्ता पाणिनिः । तेन ''तपरस्तत्कालस्य'' ''1-1-70'', ''अवङ् स्फोटायनस्य''

6-1-12 इत्यादि सूत्रेषु स्फोटशब्दो मध्यमानादाभिव्यङ्ग्यो वाचकः प्रत्यपादि । स च निर्गुणोऽखण्डो नित्यो ब्रह्मप्राप्तिरुप इत्येवं रीत्या मध्यमा-वाग्रूपस्य तस्य ब्रह्मतत्त्वं तेन मुनिना न्यरुपि । एतादृशशब्दब्रह्मसाक्षात्कारेण मोक्षो जायत इति कृत्वा व्याकणमपि दर्शनं भवति ।

## ''व्याकरणस्याद्वैतत्वनिरुपणम्''

अद्वैतवेदान्तदर्शने वेदान्तिभिनिर्गुणो निष्क्रियोऽखण्डसच्चिदानन्दस्वरुपो, नित्यशुद्धबुद्धस्वरुपो ब्रह्मपदार्थो न्यरुपि । तथैव पाणिनीय व्यकारणेऽप्यद्वैतवेदान्तशास्त्र-प्रतिपादितब्रह्मपादर्थाभिन्नः स्फोटवादो मुनित्रयेण निरुपितः । एवमद्वैतवेदान्ते महता प्रबन्धेन मायावादो निरूपितः । पाणिनीयव्याकरणेऽपि मायावादसदृशो वर्णपदादिस्फोटविचारो व्यधायि । वेदान्तिर्भिर्विवर्तवादो यथऽङ्गीकृतस्तथैव व्याकरणेऽपि विवर्तवादः अङ्गीकृतः । एवमद्वैतवेदान्ते वेदान्तिभिर्ब्रह्मप्राप्युपायत्वेनान्नमयप्राणमयमनोमयविज्ञानमयानन्दमयात्मकं पञ्चकोशव्युत्पादनं व्यधायि । तथैवाखण्डवाक्यस्फोटज्ञानाय पाणिनीयैर्वर्णपदादिस्फोट-कल्पनमकारि । अपिच भगवान् पाणिनिः स्वीयाष्टध्याय्यां अन्ते ''अ अ'' इति सूत्रं प्रणिनाय तत्र सूत्रे अकारस्य द्विरुक्तिः कृता । शिवभक्तःपाणिनिश्शिवप्रसादलब्धमक्षर-समाम्नायमाधारीकृत्य शिवमूलकत्वेन शास्त्रमारभ्यान्ते ''अ अ'' 8-4-68 इति सूत्रस्थद्वितीयाकारेण विष्णुस्मरणरुपं मङ्गलमकरोत् । एवञ्चात्र पाणिनिसूत्रेषु शिवकेशवयोरभेदस्तेन प्रादर्शि । निर्गुणाद्वयवादिन एव खलु शिवकेशवयोरभेदमङ्गीकुर्वन्ति । तेन पाणिनिरपि निर्गुणाद्वयब्रह्मवादी, तत्प्रोक्तत्वेन पाणिनीयं व्याकरणमप्यद्वैतदर्शनं भवतीति पूर्वोक्तिप्रमाणैर्ज्ञायते ।

## ''वाक्यपदीयरचनाया आवश्यकता''

श्रीमता पाणिनिना ''अष्टाध्यायी व्यरचि। तत्र ''द्रव्यं, गुण'' इत्यादयशब्दाः प्रयुक्ताः। यथा- ''किमेत्तिङव्ययधादाम्वद्रव्यप्रकर्षे 5-4-13, ''विप्रतिषिद्धं चानधिकरणवाची'' 2-4-13 इत्यादिना। अत्राधिकरणशब्दो द्रव्यवाचकः। ''वोतोगुणवचनात्'', ''पूरणगुण'' ''गुणवचनब्राह्मणादिभ्यः'', ''विभाषा गुणेऽस्त्रियामित्यादिसूत्रेषु, तथा ''ईषद्गुणवचनस्य'', ''यस्य गुणस्य भावाद्द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ ''इत्यादिवार्तिकेष्वपि द्रव्यगणशब्दौ प्रयुक्तौ। तथा भगवता पतञ्जलिनापि महाभाष्ये पस्पशायां ''द्रव्यं नित्यं'', ''गुणसमुदायो द्रव्यमि''त्यादिना द्रव्यगुणशब्दौ प्रयुक्तौ । तथा ''वर्तमाने लट्'', भविष्यति गम्यादयः'', ''भूते'' इत्यादिसूत्रेषु कालवाचकशब्दाः प्रयुक्ताः। तथा ''दिङनामान्यन्तराले'' ''दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः'', ''अन्यारादितरर्ते'' ''विभाषा दिक्समासे बहुव्रीहौ'' इत्यादिसूत्रेषु दिक्शब्दःप्रयुक्तः। तथा ''भूवादयो धातवः'' इति सूत्रे ''क्रियावचनो धातुः'', ''भाववचनो धातुः'' इत्यादिना कात्यायनेन क्रिया-वाचकशब्दाः प्रयुक्ताः। किञ्च वैयाकरणानां मुख्यसिद्धान्तः स्फोटशब्दस्सूत्रकृता वाच्यवृत्त्या विरलतया प्रत्यपादि। एवं कात्यायनेन ''समर्थःपदविधिः'' 2-1-1 इति सूत्रे ''आख्यातं सविशेषणं वाक्यं,'' ''एकतिङ् वाक्यमि''त्यादिना वाक्यलक्षणमुक्तम्। तथा ''सुप्तिङन्तं पदमि''ति पाणिनिना पदं लक्षितम्। ''समर्थःपदविधिः'' 2-1-1. इति पाणिनिना सूत्रितम्। समर्थशब्दार्थश्च ''पृथगर्थानामेकार्थीभावस्समर्थवचनमिति वार्तिककारेण विवृतः। तथा कर्तृकर्मादिसंज्ञाविधानपूर्वकं कर्त्राद्यर्थेषु धर्मिषु पाणिनिना द्वितीयादयो विहिताः।

एवं रीत्या अनेके विषयाःपाणिनीये सूत्रवार्तिकभाष्येषु विधिरुपेण न्यक्षिपन्त। परन्तु सामान्यमन्दमध्यमादिकारिणस्तान् याथार्थ्येन ग्रहीतुं नाशक्नुवन्। किञ्चैते पदार्था दर्शनान्तरीयसाधारणाः। अतस्तेषामप्येते पदार्थाः क्षोदक्षमा विचारयोग्याश्चासन्। द्रव्यगुणादीनां विशिष्यार्थो मुनिभिर्नैव न्यरुपि। किञ्च द्रव्यगुणादिशब्दश्रवणे लोकप्रसिदध्या कणादिपरिभाषता एव पदार्था बुदध्यारुढा भवन्ति। पृथिव्यादीनि नव द्रव्याणि, रुपरसादयश्चतुर्विंशतिर्गुणा इत्यादिना। तत्परिभाषितानामेवात्र व्याकरणशास्त्रे सर्वत्र ग्रहणे सूत्रार्थे न सम्यक् सुज्ञातो भवति। तेन शब्दसाधुत्वनिर्णयो दुश्शक एव भवेत्।

किञ्च दर्शनान्तरीया नैयायिकमीमांसकादयो व्याकरणशास्त्रस्थसूत्रवार्तिकभाष्याणामर्थान् गृहीत्वा व्याकरणशास्त्रे विचाराय प्रावर्तन्त। तदा पाणिनीयं शब्दसाधुत्वनिर्णयाय न सुशकमभूत्।

अत्र किञ्चिदुदाहरामः- तथा हि - ''किमेत्तिङव्ययधाम्वद्रव्यप्रकर्षे'' (5-4-113) इति पाणिनीयं सूत्रम्। किम् , एत् तिङव्ययेभ्यो यो घः (तरप्तमपौ) तदन्तादामुप्रत्ययःस्यान्नतु द्रव्यप्रकर्षे'' इति तत्सूत्रार्थः ''उच्चैस्तमाँस्तरुः'' इत्युदाहरणम्। द्रव्यप्रकर्षे त्वाम् न भवति, ''उच्चैस्तमस्तरुः'' इति प्रत्युदाहरणमिति वैयाकरणा व्याचक्षते।

अत्रेदं वक्तव्यम् - कथमुदाहरणप्रत्युदाहरणसङ्गतिः? उन्नते भूप्रदेशे वर्तमानस्तरुरित्युदाहरणवाक्यार्थः। उन्नतस्तरुरिति प्रत्युदाहरण वाक्यार्थः। उदाहरणे उच्चैस्त्वं भूप्रदेशे, न तु वृक्षे। प्रत्युदाहरणेतु तत्त्वं वृक्ष एव, नतु भूप्रदेषे। उभयत्रापि भूप्रदेशस्य, वृक्षस्य च पार्थिवत्वेन पृथिव्या द्रव्यादिष्वन्यतमत्वेनोभयत्राप्यप्रकर्ष इति कणादपरिभाषितद्रव्यपदार्थग्रहणे पाणिनिसूत्रार्थे विप्लुत एव भवति। अत्र व्याकरणशास्त्रे मुनित्रयं न किमपि निश्चिकाय।

तथा''यस्य गुणस्य भावाद्द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ ''इति वार्तिकस्य'' घटस्य भावो घटत्वं, रुपस्य भावो रुपत्वमि''त्युदाहरन्ति वैयाकरणाः। अत्रापि विप्रतिपत्तिरेव। घटत्वमित्यत्र यद्यपि घटो द्रव्यम्। तद्वृत्तिघटत्वन्तु न गुणः। किन्तु सामान्यम्। अतस्तत् कथमुदाहरणम्। एवं रूपं न द्रव्यम्। किन्तु गुणः तद्वृत्तिरूपत्वं तु न गुणः। किन्तु जातिः। अतो रूपस्य भारो रूपत्वमित्युदाहरणं कथं सङ्गच्छते। एवमेव राजपुरुषादिवृत्तौ क्लृप्तावयवशक्त्यैव राजसम्बन्ध्यभिन्नः पुरुष इति बोधोदयात् तदर्थं वैयाकरणैः कथमेकार्थीभाव अङ्गीक्रियते, वर्णपदादिभिरेव बोधसिद्धौ स्फोटपदार्थोऽप्यनावश्यक एवेत्यादिरीत्या दर्शनान्तरीया व्याकरणशास्त्रे पर्यनुयुञ्जत। तत्पर्यनुयोगश्च तदानीन्तनशाब्दिकानां दुष्परिहर एवासीत्। तदा अस्मच्छास्त्रमनन्वितार्थबोधकमनुपयुक्तकरञ्चेति बुद्धिरासीच्छाब्दिकानाम्। एतादृशी परिस्थितिर्व्याकरणशास्त्रस्य समजनि। उक्तञ्च ''[1]वाक्यपदीये'' -

''*यः पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः।*

*काले स दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः॥*'' इति।

एवं स्थिते चन्द्राचार्यवसुरातौ नामकौ द्वौ महावैयाकरणौ दर्शनान्तरीयवासना-वासितान्तःकरणानां, शुष्कलाघवतर्कैकशरणानां नव्यनैयायिकानां, मीमांसकानाञ्च मतनिराकरणपूर्वकं दर्शनान्तरीयैः व्याकरणशास्त्रे कृतानामाक्षेपाणां समाधानानि कथयन्तौ व्याकरणसिद्धान्तान् मुनित्रयसम्मतरीत्या प्रतिपादयामासतुः। एतौ सकलदर्शनेषु परिनिष्ठितौ।

---

1. ''वाक्यपदीये'' (प्रकीर्णप्रकाशाम्बाकर्त्रीव्याख्यानद्वयसहिते) द्वितीयकाण्डे पृष्ठसङ्ख्या - 521; श्लोकसङ्ख्या - 480

व्याकरणशास्त्रे सूत्रवार्तिकभाष्यकृद्भिर्द्रव्यगुणादिशब्दाः प्रयुक्ताः । परन्तु तेषां लक्षणानि तैर्न प्रत्यपादिषत । दर्शनान्तरीयद्रव्यादिलक्षणस्वीकारे व्याकरणसिद्धान्तानां मूलच्छेदो भवेत् । अतो दर्शनान्तरीयाणां लक्षणेभ्यो द्रव्यगुणादीनामन्यानि लक्षणानि वक्तव्यानि । एवं मन्वानौ तौ द्रव्यगुणादीनामन्यादृशरीत्या लक्षणानि उक्त्वा व्याकरणसिद्धान्तान् मुनित्रयसम्मतिपूर्वकं प्रतिपादितवन्तौ । एतौ स्वप्रियच्छात्राय गुरवे भर्तृहरिणे शिष्यवात्सल्येनैतान् व्याकरणसिद्धान्तान् सादरमबोधिषाताम् । तदा भर्तृहरिस्सकलशास्त्रेषु कृतभूरिपरिश्रमो नैयायिकादिमतनिराकरणपूर्वकं द्रव्यगुणादीनां लक्षणानि परिभाष्य व्याकरणसम्प्रदायं रक्षयन् शाब्दिकानां तच्छास्त्रे अप्रामाण्यमपाकरोत् । उक्तञ्च [1]वाक्यपदीये -

"*न्यायप्रस्थानमार्गान् तानभ्यस्य स्वञ्च दर्शनम् ।*

*प्रणीतो गुरुणाऽस्माकमयमागमसङ्ग्रहः ॥*" इति ।

तदा भर्तृहरिर्गुरूपदिष्टान् सर्वानपि सिद्धान्तान् सङ्कलय्य यत्र कणादपरिभाषित न्यायपदार्थस्वीकारे पाणिनिसूत्रार्थो न घटते तत्र तद्व्यतिरेकेण महाभाष्याद्याकरग्रन्थप्रामाण्यप्रदर्शनपुरस्सरं पदार्थान् निर्णीय पाणिनीयस्य योग्यं प्रामाणिकं समन्वयमकल्पयत् । यथा - "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" इति सूत्रे द्रव्यपदार्थविचारसन्दर्भे यत्र कणादपरिभाषितद्रव्यपदार्थग्रहणे शास्त्रं न समन्वेति तत्र कणादमतवैलक्षण्येन -

---

1. वाक्यपदीये (प्रकीर्णप्रकाशाम्बाकर्त्रीव्याख्यानद्वयसहिते) द्वितीयकाण्डे पृष्ठसङ्ख्या - 523; श्लोकसङ्ख्या - 482

*''वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।*

*द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः ॥''*

इति [1]श्लोकेन द्रव्यादिपदार्थानां लक्षणं प्रत्यपादयत् । ''इदं तदिति सर्वनामपरामर्शयोग्यं वस्तु द्रव्यमित्येकं द्रव्यलक्षणम् । हरिणैव ''भेद्यत्वेन विवक्षितोऽर्थो द्रव्यमि''ति लक्षणान्तरमुक्तम् । किञ्चिन्निरूपितविशेष्यत्वेन विवक्षितोऽर्थो द्रव्यमिति तदर्थः । प्रकृते ''उच्चैस्तमाँस्तरुः'' इत्यत्रोन्नते देशे इत्यर्थे उच्चैश्शब्दस्याधिकरणशक्तिप्रधानतया सम्बन्धस्य विशेष्यत्वाददेशस्य तत्र विशेषणत्वेन निरुक्तरीत्या लक्षितं द्रव्यं तत्र नास्ति । अतो द्रव्यप्रकर्षाभावान्निरुक्तार्थे आमुः प्रवर्तते । उन्नतस्तरुरित्यर्थे उच्चैस्तमस्तरुरित्यत्रोन्नतस्य तरोर्विशेष्यत्वेन विवक्षणेन द्रव्यत्वात् प्रकृतनिषेधादामुर्न प्रवर्तते । अत्र विशेष्यत्वेन विवक्षितास्सर्वे पदार्था द्रव्याण्येव । एवञ्चात्र परकीयं द्रव्यलक्षणं न स्वीकार्यम् । तद्विषये कणादसिद्धान्तविरोधोऽस्तु नाम वैयाकरणानाम् । का वा हानिः ? यत्र परकीयद्रव्यलक्षणस्वीकारे न शास्त्राऽसङ्गतिस्तत्र तदेव मूर्धन्यतया स्वीक्रियते । यथा - ''विप्रतिषिद्धं चानधिकरणवाचि'' 2-4-13 इत्यादौ । अत्र सूत्रेऽधिकरणशब्दो द्रव्यपरः । अद्रव्यवाचिनां विरुद्धार्थानां द्वन्द्वो वैकवत्स्यादिति तत्सूत्रार्थः । गुणवाचकयोश्शीतोष्णयोर्द्वन्द्वे ''शीतोष्णम् ''शीतोष्णे'' इत्युदाहरणम् । अत्र शीतोष्णादीनामपि व्याकरणशास्त्रप्रतिपादितरीत्या द्रव्यलक्षणाक्रान्तत्वेनानधिकरणवाचीति प्रतिषेधात्

---

1. ''वाक्यपदीये'' (प्रकीर्णप्रकाशाम्बाकर्त्रीव्याख्यानद्वयसहिते) तृतीय-पदकाण्डे पृष्ठसङ्ख्या - 9; श्लोकसङ्ख्या - 9

शीतोष्णादीनामनुदाहरणत्वमेव स्यात् । द्वन्द्वस्य सुबन्तसमुदायरूपत्वेन सर्वेषां जात्युपहितद्रव्यबोधकत्वेनायं विधिस्सर्वात्मना निर्विषय एव स्यात् । अतः प्रकृतसूत्रे "वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते" इत्यादिवाक्यपदीयकरोक्तं व्याकरणशास्त्रपारिभाषितं द्रव्यं नैव ग्राह्यम् । किन्तु "गुणाश्रयो द्रव्यमि"ति प्रसिद्ध[1]कणादपरिभाषितमेव ग्राह्यम् ।

एवं गुणलक्षणप्रतिपादनविषयेऽपि "द्रव्याश्रितत्वं गुणत्वमि"ति दर्शनान्तरीयाणां लक्षणं परित्यज्य स्वशास्त्रीयसिद्धान्तसमन्वयाय "संसर्गिभेदकं यस्य स व्यापारं प्रतीयते" इत्यादि[2]कारिकया अन्यल्लक्षणं भर्तृहरिः परिष्कृतवान् ।

एवं कालविषयेऽपि सर्वाधारो नित्यो विभुरखण्डः कालः, अखण्डे कालेऽवान्तरभेदेभ्यः क्षणादिकं जायत इति नैयायिकमतनिराकरणपूर्वकं कालः क्षणरूप एव एतादृशक्षणसमुदायादखण्डः कालो जायत इति प्रत्यपादि भर्तृहरिणा स्वकीये [3]वाक्यपदीये ।

एवमेव दिग्लक्षणविषयेऽपि भर्तृहरिणा "प्राच्यादिव्यवहारहेतुदिक्" इति दर्शनान्तरीयं लक्षणं परित्यज्य स्वतन्त्रं दिग्लक्षणं वाक्यपदीये प्रत्यपादि । नव्यनैयायिकनये दिक् द्रव्यम् । परन्तु भर्तृहरिणा "दिग्द्रव्यं न भवति । गुणवद्दिगाद्याः परोपाधिरूपाशशक्तयः ।" पारतन्त्र्यं शक्तिलक्षणमिति क्रियाऽपि द्रव्यपरतन्त्रा शक्तिरिति तत्र प्रत्यपादि ।

---

1. "भास्करोदया"- ग्रन्थे - तर्कसङ्ग्रहव्याख्याने - तर्कसङ्ग्रहदीपिकाख्ये पृष्ठसङ्ख्या - 21.
2. "वाक्येपदीये" (प्रकीर्णप्रकाशाम्बाकर्त्रीव्याख्यानद्वयसहिते) तृतीय-पदकाण्डे - गुणसमुद्देशे - पृष्ठसङ्ख्या - 16; श्लोकसङ्ख्या - 1
3. वाक्यपदीये - (प्रकीर्णप्रकाशाम्बाकत्रीटीका-द्वयसहिते) तृतीये - पदकाण्डे - कालसमुद्देशे - पृष्ठसङ्ख्या - 481
4. "वाक्यपदीये" - (प्रकीर्णप्रकाशाम्बाकत्रीव्याख्यानद्वयसहिते) तृतीयकाण्डे - दिक्समुद्देशे - पृष्ठसङ्ख्या - 46; श्लोकसङ्ख्या - 2,3

## "समीक्षा"

प्रदर्शितरीत्या नैयायिकादिदर्शनान्तरीयैः पारिभाषितानि द्रव्यगुणादीनां लक्षणानि परित्यज्य भर्तृहरिर्व्याकरणशास्त्रसिद्धान्तसङ्गमनाय वाक्यपदीये द्रव्यगुणादीनामन्यानि लक्षणान्यवदत् । वस्तुतो विचार्यमाणे भर्तृहरेश्शास्त्रान्तरसिद्धान्तेषु न द्वेषः । यत्र दर्शनान्तरीयसिद्धान्तो व्याकरणशास्त्रस्याननुकूलस्तत्र मतान्तरं परित्यज्यते । यत्र दर्शनान्तरीयसिद्धान्तस्वीकारेऽप्यस्माभिर्मूर्धन्यतया आश्रीयत एव । अस्माकं वैयाकरणानां शास्त्रान्तरसिद्धान्तखण्डने नैव तात्पर्यम् । किन्त्वस्मच्छास्त्रीयप्रक्रियानिर्वहणेऽस्माभिः प्रयत्यते । अनेनैवाशयेन महता प्रबन्धेन वाक्यपदीयरचना अकारि गुरुणा भर्तृहरिणा ।

एवं भर्तृहरिर्गुरूपदिष्टमर्थं वाक्यपदीयग्रन्थप्रणयनद्वारा वैयाकरणानाममृतमिव प्रतिपादयामास । वाक्यपदीयरचना यदि न स्यात् तदा प्रदर्शितरीत्या पाणिनीयं नष्टमेव स्यात् । वाक्यपदीयस्याध्ययने तु प्रदर्शितरीत्या मतभेदस्य सुज्ञानान्नैयायिकानां समाधानदानेन महाभाष्यस्य रक्षणं वैयाकरणानां सुशकं भवति । अतो वाक्यपदीयरचनाया आवश्यकता अस्त्येव । एतदाशयेनैव सकलदर्शनार्थज्ञानपूर्वकमहाभाष्यगूढार्थज्ञापनाय च भर्तृहरिर्महाभाष्यस्य महत्वपूर्णं वाक्यपदीयनामकं व्याख्यानं वैयाकरणानुजिघृक्षया अलिखत् ।

## वाक्यपदीयशब्दस्य साधुत्वप्रतिपादनम्

वाक्यञ्च पदञ्च वाक्यपदे । तदधिकृत्य कृतो ग्रन्थ इत्यर्थे वाक्यपदेत्यस्माद्वृद्धप्रातिपदिकात् "वृद्धाच्छः" 4-2-114 इति सूत्रेण छप्रत्यये, छस्य "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" 7-1-2 इति सूत्रेणेयादेशे, "यस्येति च"

6-4-148 इत्यनेन दकारोत्तराकारलोपे, वाक्यपदीयेत्यस्य तद्धितान्तत्वेन "कृत्तद्धितसमासाश्च" 1-2-46 इति सूत्रेण प्रातिपदिकसञ्ज्ञायां, ततः "स्वौजसमौट्" 4-1-2 इत्यादिसूत्रेण प्रथमैकवचने सुप्रत्यये, तस्य "अतोऽम्" 7-1-24 इति सूत्रेण अमादेशे, द्वयोरकारयोः "अमि पूर्वः" 6-1-107 इत्यनेन पूर्वरूपे "वाक्यपदीयमि"ति शब्दो निष्पन्नः। तत्र यद्यपि पदस्य लघुत्वात् "लघ्वक्षरं पूर्वमि"ति वार्तिकेन वाक्यशब्दस्य पूर्वनिपातो भवति। एवं रीत्या वाक्यपदीयमिति साधुपदं निष्पन्नं भवति।

## "वाक्यपदीयस्थपदार्थाष्टकत्वप्रतिपादनम्"

भर्तृहरिणा महाभाष्यस्य वाक्यपदीयनामकं श्लोकरूपं व्याख्यानं व्यधायि। तच्च काण्डत्रयात्मकम्। तस्मिन् ग्रन्थे प्रथमं भवति ब्रह्मकाण्डम्। द्वितीयं भवति वाक्यकाण्डम्। तृतीयं भवति पदकाण्डम्। तत्र ब्रह्मकाण्डे -

"अपोद्धारपदार्था ये ये चार्था स्थितलक्षणाः।
अन्वाख्येयाश्च ये शब्दा ये चापि प्रतिपादकाः॥
कार्यकारणभावेन योग्यभावेन च स्थिताः।
धर्मे च प्रत्यये चाङ्गं सम्बन्धास्साध्वसाधुषु॥
ते लिङ्गैश्च स्वशब्दैश्च शास्त्रेऽस्मिन्नुपवर्णिताः।
स्मृत्यर्थमनुगम्यन्ते केचिदेव यथागमम्"॥

इति त्रिभिः [1]श्लोकैर्व्याकरणशास्त्रे विचारिता अष्टौ पदार्थाः प्रत्यपादिषत। तथा हि -

---

1. "वाक्यपदीये" (प्रकीर्णप्रकाशाम्बाकर्त्रीव्याख्यानद्वयसहिते) प्रथमेब्रह्मकाण्डे - पृष्ठसङ्ख्या - 52; श्लोकसङ्ख्या - 24,25,26.

156 श्लोकास्सन्ति । तत्र च काण्डे ''अनादिनिधनं ब्रह्म'' इति प्रथमकारिकाया आरभ्य ''तस्मादकृतकं शास्त्रं स्मृतिश्च सनिबन्धनम्'' इति 43 कारिकापर्यन्तं विषयप्रयोजनसम्बन्धाधिकारिरूपं मुख्यमनुबन्धचतुष्टयं प्रतिपादितम् । ततो''द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः'' इति 43 कारिकाया आरभ्य ''तस्मादभिन्नकालेषु वर्णवाक्यपदादिष्वि''ति 101 कारिकात्पर्यन्तं नित्यशब्दवादमनुसृत्य वाचकस्फोटशब्दः, ध्वनयः, उभयोर्विद्यमानो व्यङ्ग्यव्यञ्जकभावः, अभिव्यक्तिध्वनीनां स्वरूपं प्राकृतवैकृतध्वनिभिः स्फोटे जायमानविशेषाः, जाति-व्यक्तिस्फोटपक्षावित्येते विषयाः प्रतिपादिताः । ततो ''यस्संयोगविभागाभ्यां करणैरुपजायते'' इति 102 कारिकाया आरभ्य ''तस्य प्राणे च या शक्तिर्या च बुद्धौ व्यवस्थिता'' इति 117 कारिकापर्यन्तं कार्यशब्दवादमाश्रित्य स्फोटशब्दः, ध्वनयः, शब्दोत्पत्तौ कारणानि च न्यरूपिषत । ततः''शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धिनी'' इति 118 कारिकाया आरभ्य ''तस्माद्यश्शब्दसंस्कारस्सा सिद्धिः परमात्मनः'' इति 132 कारिकापर्यन्तं शब्दस्य माहात्म्यं, मोक्षश्चेति पदार्थद्वयं प्रादर्शि । ततो ''न जात्वकर्तृकं कश्चिदागमं प्रतिपद्यते'' इति 133 कारिकाया आरभ्य ''कायवाग्बुद्धिविषया ये मलास्समवस्थिताः'' इति 147 कारिकात्पर्यन्तं वेदार्थमूलकत्वेन स्मृतीनां प्रामाण्यं, तास्वन्यतमत्वेन व्याकरणस्यापि प्रामाण्यं न्यरूपि । ततः ''शब्दस्संस्कारहीनो यो गौरिति प्रयुयुक्षिते'' इति 148 कारिकाया आरभ्य ''उभयेषामविच्छेदादन्यशब्दविवक्षया'' इति 156 कारिकात्पर्यन्तं अपभ्रंशेषु शक्तिरस्तीति विषयो विचारितः ।

द्वितीये वाक्यकाण्डे ''आख्यातश्शब्दस्सङ्घातो जातिस्सङ्घातवर्तिनी'' इति प्रथमश्लोकादारभ्य ''तत्तदुत्प्रेक्षमाणानां पुराणैरागमैर्विना'' इति श्लोकपर्यन्तं 485 श्लोकास्सन्ति । अत्र च काण्डे वाक्यलक्षणं, तद्वैविध्यं, तस्य विचारः, वाक्यस्वरूपनिर्णयविषये मतान्तराणि, निर्विभागोऽखण्डो वाक्यार्थः, अनवयवशब्द एव वाक्यस्फोटः, पदवादिमते दोषाः, वाक्यस्य अखण्डत्वे मीमांसकैः प्रदर्शितानां प्रतिनिध्यादिदोषाणां परिहार इत्येते विषयाः प्रत्यपादिषत ।

तृतीये पदकाण्डे चतुर्दशप्रकरणानि सन्ति । एतेषां समुद्देश इति नाम्ना व्यवहारः। ते च जाति-द्रव्य-सम्बन्ध-भूयोद्रव्य-गुण-दिक्-साधन-क्रिया-काल-सङ्ख्या-पुरुषोपग्रहलिङ्गवृत्तिसमुद्देशाः । अस्मिन् काण्डे स्वीय व्याकरणशास्त्रसिद्धान्तसमन्वयाय नव्य-नैयायिकादिभिः प्रतिपादितेभ्यो द्रव्यगुणादिलक्षणेभ्योऽन्यानि स्वशास्त्रोपकारकाणि द्रव्यगुणक्रियादीनां लक्षणानि प्रतिपादितानि । एतेषां लक्षणानामेव पारिभाषिकपदेन व्यवहारः । अपि चात्र काण्डे प्रकृतिप्रत्ययौ, तयोरर्थाः, कार्यकारण भावो योग्यतारूपसम्बन्धद्वयमाहत्य पदार्थचतुष्टयं विचारितम् ।

अत्रेदं मदीयं किञ्चिद्विज्ञापनम् - वाक्यपदीयरचनायाः, भर्तृहरेश्चकालविषये, वाक्यपदीयव्याख्यानग्रन्थविषये, तस्य प्रचारविषये च बहुभिः पण्डितैः, परिशोधकैश्च तत्रद्ग्रन्थेषु, शोधप्रबन्धेषु च सम्यग्विचारविमर्शस्सप्रमाणं व्यधायि, विधीयते च । अतः पुनरुक्तिभिया, मदीयशोधप्रन्धविस्तारभिया चैतेषु विषयेषु शोधकर्त्र्या न किमपि लिख्यते ।

## ''वाक्यदीये पारिभाषिकपदार्थविचार'' इति ''विषयमधिकृत्य शोधप्रबन्धनिर्माणे कारणप्रदर्शनम्''

सर्वेषु शास्त्रेषु पारिभाषिकपदानि वर्तन्ते । यथा - व्याकरणे वृद्धिगुणटिघुभद्रव्यगुणसम्बन्धपुरुषलिङ्गादीनि । तथैव न्यायशास्त्रे द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः, वेगो, भावना, स्थितिस्थापकः, स्मृतिः, अयुतसिद्धिरित्यादीनि, पूर्वमीमांसायामपि ग्रहः, अपूर्व इत्यादीनि, तथैव वेदान्तशास्त्रे मिथ्या, माया, अध्यासो, जीवन्मुक्तः आगामिसञ्चितप्रारब्धादीनि च सन्ति । एवञ्च शास्त्रेषु तत्तच्छास्त्रसम्बन्धिनां पारिभाषिकपदानामभावे तत्तच्छास्त्रसिद्धान्तोच्छेदापत्तिभिया सर्वेशशास्त्रकारैस्स्वस्वशास्त्रेषु पारिभाषिकपदानि व्यरचिषत । व्याकरणान्वये उत्पन्ना शोधकर्त्र्यां मयि बाल्यादारभ्य प्रतिक्षणं तच्छ्रवणेन व्याकरणाध्ययने अभिरुचिस्समजनि । तदनु अहं मत्पितृपादानां व्याकरणरत्न - व्याकरणाचार्य-दर्शनाचार्येत्याद्युपाधिभाजां राष्ट्रपतिसम्मान्नितानामपरनागेशस्वरूपाणां महामहोपाध्यायस्वर्गीय-पेरिसूर्यनारायणशास्त्रि-पादानां निकटे रेखामात्रमप्यनतिक्रम्य सम्पूर्णं साङ्गोपाङ्गं व्याकरणशास्त्राध्ययनं कृतवती । तेषां प्रातःस्मरणीयानामाशीर्वादेन, मन्मार्गनिर्देशकाशीर्वादेन च व्याकरणशास्त्रीय-वाक्यपदीयस्थपारिभाषिकपदार्थपरिशोधने शोधकर्त्र्याश्चिकीर्षा पितृपादानां तपःप्रभावेन सफलतामुपेयादिति विश्वासः ।

अत्रान्यो मुख्यविषयः - द्रव्यगुणादिपारिभाषिकपदानि व्याकरण इव न्यायशास्त्रेऽपि राराजन्ते । सर्वत्र नैयायिकोक्त-तादृशपारिभाषिकपदार्थग्रहणे पूर्वोक्तरीत्या

व्याकरणशास्त्रसिद्धान्तो न सङ्गच्छते । अतो भर्तृहरिणा घटस्य भावो घटत्वमित्यादौ त्वादिप्रत्ययविधानाय कणादमतवैलक्षण्यं द्रव्यगुणादिपदानां पारिभाषिकं स्वरूपं प्रत्यपादि । अपि च व्याकरण एव कानिचिदव्याकरणशास्त्रमात्रप्रसिद्धानि पारिभाषिकपदानि च सन्ति । यथा "वृत्तिः", "एकार्थीभावः", जहत्स्वार्था, अजहत्स्वार्था, उपग्रहः, स्फोटः, निपातः, उपसर्गः, अभेदैकत्वसङ्ख्या इत्यादीनि । एतेषामर्थाश्च दर्शनान्तरेष्वप्रसक्तत्वान्न लक्षिताः । अतस्सन्दर्भानुसारं क्वचिन्नैयायिकाभिमताः पारिभाषिकपदार्थाः क्वचिद्ग्राह्याः । क्वचिदव्याकरणशास्त्रप्रतिपादिताः पारिभाषिकपदार्था ग्राह्याः । अत उभयविधपारिभाषिक-पदानां वाक्यपदीयानुसारेणार्थोऽत्र वर्ण्यते ।

भर्तृहरिविरचितस्यास्य वाक्यपदीयस्य व्याकरणप्रयुक्तपारिभाषिक-पदार्थनिर्णायकतया प्रकृतत्वात्तदवलम्बनेन शोधकर्ष्याऽत्रैतादृशपरिश्रमः प्रारभ्यते । अपि चैकार्थीभावव्यपेक्षादिपदानामर्थनिर्णयो भाष्ये सूक्ष्मरूपेण वर्तते । अतस्तद्विस्तारस्यावश्यकताऽपि अत्र जागर्ति । तादृशविस्तारो वाक्यपदीयाधीन एव । द्रव्यादीनां लक्षणं भाष्ये तत्र तु सूक्ष्मतया निर्दिष्टमपि दुर्ग्रहमेव । अनुमानप्रमाणेन भाष्यकारादीनामाशयं सङ्कलय्य द्रव्यगुणादीनां लक्षणानि भर्तृहरिणा न्यरूपिषत ।

**अत्र काचन शोधकर्ष्याः विज्ञप्तिः - व्याकरणशास्त्रे यद्यपि प्राचीनकालिकैर्वैयाकरणैः** पाणिन्यादिभिर्व्याकरणशास्त्रीयप्रक्रिया-निर्वहणद्वारा शब्दसाधुत्वनिरूपणसन्दर्भे पारिभाषिकपदानि कानिचिन्निर्दिष्टानि । तद्यथा-क.टि. - "अचोऽन्त्यादि टि" इति पाणिनि[1]सूत्रम् । अचां मध्येयोऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यादिति तदर्थः । "शकन्धु"

1. अष्टाध्यायीग्रन्थे - प्रथमाध्याये -प्रथमपादे - सूत्रसङ्ख्या - 64.

इत्यत्र शक - अन्धुरितिस्थिते ''शकन्ध्वादिषु पररूपं वाच्यमिति'' वार्तिकेन द्वयोरकारयोः पररूपविधानायेयं टिसञ्ज्ञा पाणिनिना प्रोक्ता ।

ख. घु :- ''दाधाघ्वदाप्'' इति पाणिनि[1]सूत्रम् । दारूपा धारूपाश्च धातवो घुसञ्ज्ञका भवन्ति, दाप्दैपौ विना इति तदर्थः । प्रणिदापयतीत्यादावुपसर्गनकारस्य नेर्गदनदपदेत्यादिसूत्रेण णत्वविधानायेयं संज्ञा पाणिनिना समाश्रायि ।

''ग'' भसञ्ज्ञा :- ''यचि भम्'' इति पाणिनि[2]सूत्रम् । यादिष्वजादिषु कप्रत्ययावाधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं भसंज्ञं स्यादिति तदर्थः । राज्ञ इत्यत्र राजन+अस् इति स्थिते जन्नित्यत्र जकारोत्तरस्य अकारस्य ''अल्लोपो नः'' इत्यनेन सूत्रेणाल्लोपविधानायेदं सूत्रं पाणिनिना आरब्धम् । एवमेव ''[3]अङो नास्त्रियाम्'', ''[4]शेषोघ्यसखि'', ''[5]सुप्तिङन्तं पदम्'', ''[6]वृद्धिरादैच्'', ''[7]अदेङ् गुणः'', ''[8]विरामोऽवसानम्'', [9]भूवादयो धातवः, ''[10]उपसर्गाःक्रियायोगे'', ''[11]अर्थवदधातुरप्रत्ययः प्रातिपदिकम्'', ''[12]यूस्त्र्याख्यौ नदी'' इत्यादिसूत्रेषु श्रीमता पाणिनिना पारिभाषिकसञ्ज्ञा न्यरूपिषत । आदौ व्याकरणशास्त्रे स्थितानां

---

1. अष्टाध्यायीग्रन्थे - प्रथमाध्याये - प्रथमपादे - सूत्रसङ्ख्या - 20.
2. अष्टाध्यायीग्रन्थे - प्रथमाध्याये - चतुर्थपादे - सूत्रसङ्ख्या - 18.
3. अष्टाध्यायीग्रन्थे - सप्तमाध्याये - तृतीयपादे - सूत्रसङ्ख्या - 120.
4. अष्टाध्यायीग्रन्थे - प्रथमाध्याये - चतुर्थपादे - सूत्रसङ्ख्या - 7.
5. अष्टाध्यायीग्रन्थे - प्रथमाध्याये - चतुर्थपादे - सूत्रसङ्ख्या - 14.
6. अष्टाध्यायीग्रन्थे - प्रथमाध्याये - प्रथमपादे - सूत्रसङ्ख्या - 1.
7. अष्टाध्यायीग्रन्थे - प्रथमाध्याये - प्रथमपादे - सूत्रसङ्ख्या - 2.
8. अष्टाध्यायीग्रन्थे - प्रथमाध्याये - चतुर्थपादे - सूत्रसङ्ख्या - 110.
9. अष्टाध्यायीग्रन्थे - प्रथमाध्याये - तृतीयपादे - सूत्रसङ्ख्या - 1.
10. अष्टाध्यायीग्रन्थे - प्रथमाध्याये - चतुर्थपादे - सूत्रसङ्ख्या - 59.
11. अष्टाध्यायीग्रन्थे - प्रथमाध्याये - द्वितीयपादे - सूत्रसङ्ख्या - 45.
12. अष्टाध्यायीग्रन्थे - प्रथमाध्याये - चतुर्थपादे - सूत्रसङ्ख्या - 3.

सर्वेषां पारिभाषिकपदार्थानां विषये परिशोधनं कर्तव्यमिति शोधकर्त्र्या चिन्तितम् । परन्तु समयविस्तारभिया, शोधप्रबन्धविस्तारभिया च शोधकर्त्र्या तत्सर्वं परित्यज्य केवलं वाक्यपदीये स्थितानां पारिभाषिकपदानामर्थविचारो मन्मार्गनिर्देशकानां सूचनानुसारं क्रियते । अत एव शोधप्रबन्धोऽयं सीमितः । एतत्सर्वं मनसि निधाय वास्यपदीयस्थपारिभाषिकपदार्थविचारः कर्तव्य इति धिया मन्मार्गनिर्देशकानां मार्गनिर्देशनानुल्लङ्घनपूर्वकं शोधकर्त्र्यैतावान् यत्नः आरभ्यते ।

अस्मिन्शोधप्रबन्धे पञ्चाध्याया वर्तन्ते । तेषु प्रथमोऽध्यायो भवत्युपोद्घातः । उपोद्घातेऽत्राधोनिर्दिष्टा विषया वर्तन्ते । तथा हि -

''क.'' ''व्याकरणशब्दस्य व्युत्पत्तिः ।''

''ख.'' ''व्याकरणस्य दर्शनत्वसिद्धिः ।''

''ग.'' ''व्याकरणस्याद्वैतदर्शनत्वसमर्थनम् ।''

''ङ.'' ''वाक्यपदीयशब्दस्य साधुत्वप्रतिपादनम् ।''

''च.'' ''वाक्यपदीयस्थपदार्थाष्टकनिरूपणम् ।''

''छ.'' ''वाक्यपदीये काण्डत्रयस्थविषयप्रदर्शनम् ।''

''ज.'' ''वाक्यपदीये पारिभाषिकपदार्थविचार इति विषयमधिकृत्य शोधप्रबन्धनिर्माणे कारणप्रदर्शनम् ।''

द्वितीयाध्याये एते विषया वर्तन्ते । तथा हि -

''क.'' ''द्रव्यपदार्थनिरूपणे वाक्यपदीयकारस्य दर्शनान्तरीयैस्सह'' अंशतो वैमत्यैकप्रदर्शनम् ।

''ख.'' ''गुणपदार्थनिरूपणे भर्तृहरेर्दर्शनान्तरीयैस्सहांशतो वैमत्यैकमत्य-प्रदर्शनम्।''

''ग.'' ''दिक्पदार्थनिरूपणे भर्तृहरेर्दर्शनान्तरीयैस्सहांशतो वैमत्यैकमत्य प्रदर्शनम्।''

''घ.'' ''नैयायिकमीमांसकादिदर्शनान्तरीयमतखण्डनपूर्वकं वाक्यपदीयकारोक्तरीत्या विस्तरेणाधिकरणाख्यपारिभाषिकपदार्थमिर्शः।''

''ङ.'' ''वैशेषिकादिदर्शनान्तरीयमतखण्डनपुरस्सरं हर्युक्तदिशा कालस्वरूप-निरूपणम् ।''

''च.'' ''वाक्यपदीयस्थपारिभाषिकेषु पुरुषशब्दार्थविचारः ।''

''छ.'' ''वाक्यपदीयस्थपारिभाषिकेषु सङ्ख्यापदार्थविचारः ।''

''ज.'' ''वाक्यपदीयस्थपारिभाषिकेषु लिङ्गपदार्थविचारः ।''

''झ.'' ''वाक्यपदीयस्थ पारिभाषिकेषु जातिपदार्थविचारः ।''

''ञ.'' ''वाक्यपदीयस्थपारिभाषिकेष्वन्यतमस्य सम्बन्धपदार्थविचारः ।''

अस्मिन् शोधप्रबन्धे तृतीयाध्यायस्य ''दर्शनान्तरेऽप्रदर्शतानां वैयाकरणाभिमतानां वाक्यपदीयस्थपारिभाषिकपदार्थानां विमर्श'' इति नाम ।

अस्मिन् तृतीयाध्याये अधोनिर्दिष्टा विषया वर्तन्ते । -

''क.'' ''साधनशब्दार्थविचारः ।''

''ख.'' ''अपोद्धारपदार्थविचारः ।''

''ग.'' ''स्फोटशब्दार्थविचारः ।''

''घ.'' ''उपग्रहशब्दार्थविचारः ।''

''ङ.'' ''क्रिया-पदार्थविचारः ।''

“च.” “एकार्थीभावपदार्थविचारः ।”

“छ.” “जहत्स्वार्था-पदार्थविचारः ।”

“ज.” “वाक्यपदीयस्थपारिभाषिकेषूपसर्गनिपाताख्ययोः पारिभाषिकशब्दार्थ विचारः ।”

अस्मिन् शोधप्रबन्धे चतुर्थाध्यायो भवति “वाक्यपदीयस्थकेषाञ्चन पारिभाषिकपदार्थनिर्णये भर्तृहरेः कल्पना-चातुर्थम्-समीक्षा च” इति । अत्र अध्याये त्रयो विषया वर्तन्ते । तथा हि -

“क.” “वाक्यपदीयस्थकर्मसञ्ज्ञाप्रकरणप्रत्याख्याने भर्तृहरेः कल्पनाचातुर्यम्, समीक्षा च ।”

“ख.” “वाक्यपदीयस्थपारिभाषिकेषु अभेदैकत्वसङ्ख्या-पदार्थविचारः ।”

“ग.” “वाक्यपदीयकारोक्तरीत्या प्रथमाया अकारकत्वप्रतिपादनं, समीक्षा च।”

मदीयशोधप्रबन्धे पञ्चमोऽध्यायो भवत्युपसंहारः । अस्मिन्नध्याये वाक्यपदीये कुत्र कुत्र भर्तृहरिणा पारिभाषिकपदानि प्रयुक्तानि । तेषां पारिभाषिकपदार्थानां वैयाकरणैर्दर्शनान्तरीयैश्च कथं वर्णनं विहितम् । कुत्र नैयायिकादिदर्शनान्तरीयप्रतिपादिता अर्था ग्राह्याः, कुत्र ते नैव ग्राह्याः ? कुत्र दर्शनान्तरीयैरप्रदर्शितानां द्रव्यगुणाधिकरणपुरुषलिङ्गजातिसम्बन्ध-क्रियाकालदिक्लिङ्गादीनां पारिभाषिकपदार्थानां विमर्शः कृतः ? भर्तृहर्युक्तानां केषाञ्चनाभेदैकत्वादीनां पारिभाषिकपदार्थानां समीक्षा कृता, एवमत्र शोधप्रबन्धनिर्माणसमये शोधप्रबन्धनिर्माणसमये के के शास्त्रीयग्रन्थाः, काव्यनाटकादीनि लघुटिप्पणीरूपेण शोधकर्त्र्या समाश्रायिषतेत्यादयो विषयाः कूलङ्कषं सविमर्शं शोधकर्त्र्या व्याख्याता इत्याकारका विषया वर्तन्ते ।

अत्रेदं विचारणीयम् - मदीयशोधप्रबन्धे व्याकरणशास्त्रीयसिद्धान्तसमन्वयाय सत्यवसरे सति सन्दर्भे विधिवद्दर्शनान्तरीयमतानि खण्डितानि। तद्वदेव यत्र महाभाष्यादिग्रन्थविरोधस्तत्र भर्तृहरिहेलाराजरघुनाथशर्मप्रभृतीनां वैयाकरणमूर्धन्यानां मतान्यपि सप्रमाणं शोधकर्त्र्या विमृष्टानि। तत्र कारणमपीदमेव सम्भाव्यते यत्, न तावत् शोधकर्त्र्याः नैयायिकादिदर्शनान्तरीयाणां मतखण्डने, न वा भर्तृहरिहेलाराजरघुनाथशर्मप्रभृति वैयाकरणमूर्धन्यानां विषयेऽविश्वासप्रदर्शने तात्पर्यमस्ति। केवलं पदार्थपरिशोधनमेव प्रधानं लक्ष्यमभिलषय्य शोधकर्त्र्यैतावान् साहसः अकारि, नान्यत्।

अत्रेदं तत्त्वम् - लोके सर्वाणि शास्त्राणि महत्वपूर्णानि, परमप्रामाणिकानि च। तत्तच्छास्त्रप्रणेतारोऽपि देवकल्पाः, परमप्रामाणिकाश्चैव। ते तु तत्त्वज्ञाः, लक्ष्यैकचक्षुष्काः, परमयोगिनश्च। ते सर्वे तत्तच्छास्त्रमर्यादानुसारं तत्तच्छास्त्रीयसिद्धान्तसमन्वयाय प्रायतन्त। तत्रेदं शास्त्रं समीचीनं, शास्त्रमिदमसमीचीनमिति निर्णयो लक्षणैकचक्षुष्काभिमादृश्यादिभिः कर्तुं न शक्यते। केवलं पदार्थपरिशोधनमेवास्माकं व्यापारः। अस्माकं व्याकरणशास्त्रसिद्धान्तसमन्वये यदि कदाचिच्छास्त्रान्तरसिद्धान्तो विरूणद्धि तदा तत्सिद्धान्तस्त्यज्यते। यथा श्रीमद्भिर्गदाधरभट्टाचार्यैः कर्मविभागप्रदर्शनसन्दर्भे ''कर्म हि त्रिविधम् - प्राप्यं, प्रकृति-विकृति च'' इति रीत्या कर्मणस्त्रैविध्यं प्रादर्शि ''व्युत्पत्तिवादे[1]''। तत्तु न भर्तृहरि - ग्रन्थारूढम्। किञ्च तत्सन्दर्भे ''भस्मवत्'', ''विकारवत्'' इत्यनयोरर्थो नैव न्यरूपि भट्टचार्यैः। प्रकृतसन्दर्भ एतादृशगदाधरभट्टाचार्यसिद्धान्तस्वीकारेऽस्माकं

1. ''व्युत्पत्तिवादे'' - आदर्शटीका - सहिते - द्वितीयाकारके - पृष्ठसङ्ख्या - 337.

व्याकरणशास्त्रसिद्धान्तस्योच्छेदापत्तिः । अतोऽत्र गदाधरभट्टाचार्याणां सिद्धान्तो नैवा श्रीयते प्रामाणिकैश्शाब्दिकैः ।

अत्रान्यदेकमुदाहरणं प्रदर्शयामि । यथा - वैयाकरणभूषणसारादिग्रन्थेषु द्वितीयाविभक्त्यर्थविचारसन्दर्भे ''कर्तृनिष्ठक्रियाजन्यफलाश्रयं कर्म'' इति कर्मलक्षणस्वीकारे'' चैत्रश्चैत्रं गच्छती''त्यादिदोषवारणाय कर्मलक्षणे क्रियायां परसमवेतत्वं द्वितीया-वाच्यमिति, प्रयागात् काशीं गच्छति चैत्रे प्रयागं गच्छतीत्यापत्तिवारणाय धात्वर्थतावच्छेदकं फले विशेषणं देयम् । तथा च परसमवेतक्रियाजन्यधात्वर्थतावच्छेदकफलाश्रयत्वं कर्मत्वमिति कर्मलक्षणं फलति । चैत्रस्तण्डुलं पचतीत्यत्र लक्षणसमन्वयः - तथा हि - यस्मात् प्रातिपदिकाद्द्वितीया चिकीर्षिता ? तण्डुलपदात् । तदर्थस्तण्डुलः । तदपेक्षया यः परः = चैत्रः । तत्समवेता या क्रिया । विक्लित्त्यनुकूला क्रिया । तज्जन्यं धात्वर्थतावच्छेदकञ्च यत् फलं विक्लित्तिः। तदाश्रयत्वं तण्डुले वर्तत इति । चैत्रः चैत्रं गच्छतीत्यापत्तिरपि नास्ति । तथा हि - यस्मात् प्रातिपदिकाद्द्वितीया चिकीर्षिता = चैत्रपदात् । तदर्थश्चैत्रः । तदर्थापेक्षया यश्च पर इत्युक्ते चैत्रो न भवति । न हि चैत्रश्चैत्राद्भिन्नः । अतस्तत्समवेतक्रियाजन्यधात्वर्थतावच्छेदक-फलाश्रयत्वस्य चैत्रेऽभावान्नातिव्याप्तिरिति नैयायिका मनुते । कर्मलक्षणे तादृशविशेषणद्वयाभावेऽपि प्रकारान्तरेण दोषवारणं भवतीति वैयाकरणानामाशयः । स्पष्टञ्चेदं ''वैयाकरणभूषणसारे[1]'' सुबर्थनिर्णये । न्यायशास्त्रं महत्वपूर्णमिति मत्वा तत्र स्थले यदि नैयायिकसिद्धान्त आश्रीयेत तदा अस्माकं व्याकरणशास्त्रीयसिद्धान्तस्यैव वज्राघातापत्तिः ।

---

1. ''वैयाकरणभूषणसारे'' (प्रभा-दर्पणव्याख्यानद्वयसहिते) सुबर्थनिर्णये पृष्ठसङ्ख्या - 176 तः 182.

अतोऽत्र तेषां सिद्धान्तस्त्यज्यते । तावन्मात्रेण न्यायशास्त्रस्य महत्वं नष्टं भविष्यति । एवमेव यत्र यत्र व्याकरणशास्त्रप्रक्रिया-निर्वहणसमये न्यायशास्त्रसिद्धान्तोऽस्माकं विरुध्येत तदा तत्र तत्सिद्धान्तस्त्यज्यते । तावता न्यायशास्त्रस्य जघन्यत्वं नैवापादनीयम् । यत्रास्माकं व्याकरणशास्त्रसिद्धान्तसमन्वये शास्त्रान्तरसिद्धान्तो न विरूणद्धि तत्र तत्सिद्धान्तोऽप्यस्माभिर्मूर्धन्यतया स्वीकार्य एव । यथा - धात्वर्थनिर्णयविषये चैत्रस्तण्डुलं पचतीत्यादौ कर्तरि लकारे धात्वर्थव्यापारमुख्यविशेष्यकशाब्दबोध एवाङ्गीक्रियते वैयाकरणैः । एकत्वविशिष्टचैत्रकर्तृकतण्डुलकर्मकविक्लित्त्यनुकूलो वर्तमानकालावच्छिन्नो व्यापार इति तन्मते शाब्दबोधः । नैयायिकैस्तु ''चैत्रस्तण्डुलं पचति'' इत्यादौ कर्तरि लकारे धात्वर्थव्यापारमुख्यविशेष्यकशाब्दबोधो न कदाऽप्यङ्गीक्रियते । अपि तु प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोध एव । विक्लित्त्यनुकूलव्यापारानुकूलकृतिमाँश्चैत्र इति शाब्दबोधस्तेषाम् । वैयाकरणानां, नैयायिकानाञ्च मध्य एतादृशविप्रतिपत्तिसत्त्वेऽपि भावाख्यातस्थले ''चैत्रेण सुप्यते'' इत्यादौ चैत्रकर्तृकः स्वाप इति धात्वर्थव्यापारमुख्यविशेष्यक एव शाब्दबोधो नैयायिकानामपि । तावता नैयायिकमूर्धन्यानां व्याकरणशास्त्रे न द्वेषः । नैयायकिानामयं स्वभावो यत्तेषां सर्वत्र धात्वर्थे प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोध एरेति नास्ति नियमः। प्रदर्शितरीत्या सति सम्भरे कर्तरि लकारादौ क्वचित् प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोध आश्रीयते तैः । क्वचिद्धात्वर्थव्यापारमुख्यविशेष्यकशाब्दबोध आश्रीयते तैः । यथा - भावे लकारे ''चैत्रेण सुप्यत'' इत्यादौ ।

वैयाकरणा अपि यत्र नैयायिकसिद्धान्तस्वीकारे स्वशास्त्रविरोधो वर्तते तत्र तत्सिद्धान्तं

त्यजन्ति। अविरोधे तु तन्न्यायसिद्धान्तं गृह्णन्त्येव। यथा - गुणाश्रयो द्रव्यमिति नैयायिकानां द्रव्यलक्षणम्। तल्लक्षणस्वीकारे ''उच्चैस्तमाँस्तरुः'' ''उच्चैस्तमस्तरुः'' इत्यत्रोभयत्राऽपि वृक्षभूप्रदेशयोः पार्थिवत्त्वेन ''किमेत्तिङव्ययधादाम्वद्रव्यप्रकर्षे'' 5-4-13 इति सूत्रस्य ते प्रत्युदाहरण एव स्याताम्। तथा च पाणिनिसूत्रं निष्फलमेव स्यात्। अतस्तत्र वैयाकरणैर्नैयायिकोक्तद्रव्यलक्षणं न स्वीक्रियते। यत्र गुणाश्रयत्वं द्रव्यत्वमिति द्रव्यलक्षणस्वीकारे नैवव्याकरणशास्त्रसिद्धान्तविरोधस्समजनि, सञ्जायते, सञ्जनिष्यते वा तत्र नैयायिकोक्तद्रव्यलक्षणमपि वैयाकरणैर्मूर्धन्यतया स्वीक्रियत एव। यथा - श्रीमता पाणिनिना ''विप्रतिषिद्धञ्चानधिकरणवाचि'' 2-4-13 इति सूत्रं प्रणीतम्। अत्राधिकरणशब्दो द्रव्यवाचकः। अत्र ''वस्तूपलक्षणमि''ति वैयाकरणोक्तद्रव्यलक्षणस्वीकारे ''शीतोष्णम् - शीतोष्णे'' इत्यादौ शीतोष्णादीनामपि निरुक्तरीत्या द्रव्यलक्षणाक्रान्तत्वेनाद्रव्यवाचीति निषेधात् तेषामनुदाहरणत्वमेव स्यात्। अतः प्रकृतसूत्रे ''वस्तूपलक्षणमि''ति वैयाकरणैर्लक्षितं द्रव्यं नैव ग्राह्यम्। किन्तु ''गुणाश्रयो द्रव्यमि''ति प्रसिद्धकणादपरिभाषितं द्रव्यमेव वैयाकरणैरपि स्वीक्रियते। स्पष्टञ्चेदं ''परिभाषेन्दुशेखरे'' ''उभयगतिरिह भवति'' इति [1]परिभाषार्थनिरूपणावसरे। नह्यस्माकं शास्त्रान्तरसिद्धान्तेषु विद्वेषः। किन्त्वस्मच्छास्त्रीयप्रक्रियानिर्वहणेऽस्माभिः प्रयत्यते। यत्र शास्त्रान्तरसिद्धान्तोऽस्माकं विरुध्येत तत्र स सिद्धान्तस्त्याज्यः, अविरोधेतु ग्राह्य एव। एवमेव मीमांसायामपि। अस्माकमेकस्मिन् शास्त्रे नैव रागो, नापि शास्त्रान्तरेषु विद्वेष इति स्पष्टं सचेतसामिति दिक्॥

प्रथमोऽध्यायस्समाप्तः

---

1. परिभाषेन्दुशेखरे (भैरवी-तत्त्वप्रकाशव्याख्यानद्वयसहिते) पृष्ठसङ्ख्या - 22